श्रीश्रीलठक्कुरभक्तिविनोदकृत-

# श्रीश्रीगौराङ्गस्मरणमङ्गलस्तोत्रम्

(श्रीकृष्णचैतन्यमहाप्रभोः सुमधुरानुपूर्विकलीला)

# एवम्

# श्रीश्रीराधिकासहस्त्रनामस्तोत्रम्



प्रकाशित एवं प्राप्तिस्थान:

श्रीगौड़ीय मठ, बांद्रा (पूर्व), मुंबई-४०० ०५१. ☎२६५९१२१२

श्री श्री गुरु गौराङ्गौ जयतः




श्रीश्रीगौर-पार्षद-श्रीस्वरूप-रूपानुगवर

श्रीश्रीलठक्कुरभक्तिविनोदकृत-

# श्रीश्रीगौराङ्गस्मरणमङ्गलस्तोत्रम्

## (श्रीकृष्णचैतन्यमहाप्रभोः सुमधुरानुपूर्विकलीला)

## एवम्

# श्रीश्रीराधिकासहस्त्रनामस्तोत्रम्

प्रकाशकः

श्रीगौड़ीय मठ, बांद्रा (पूर्व), मुंबई-४०० ०५१. ☎२६५९१२१२

१००० प्रतियाँ

सम्वत् २०७२

(दि. ०९.०९.२०१६)

सङ्गणकसंस्करणं दासाभासेन हरिपार्षददासेन कृतम्

श्रीचैतन्य महाप्रभु परिचय:

कृष्णवर्णं त्विषाकृष्णं साङ्गोपाङ्गास्त्रापार्षदम् ।
यज्ञै: संकीर्तनप्रायैर्यजन्ति हि सुमेधस:

(श्रीमद्भागवतम् ११/५/३२)

श्रीराधाया: प्रणयमहिमा कीदृशो वानयैवास्वाद्यो
येनाद्भुतमधुरिमा कीदृशो वा मदीय: ।
सैख्यंचास्या मदनुभवत: कीदृशं वेति लोभात्
तद्भावाद्य: समजनि शचीगर्भ सिन्धौ हरीन्दू: ।।

(श्रीचैतन्य चरितामृत)

श्रीकृष्ण परिचय:

ईश्वर: परम: कृष्ण: सच्चिदानन्द विग्रह: ।
अनादिरादिर्गोविन्द: सर्व कारणकारणम् ।।

(ब्रह्म संहिता)

नौमीड्य तेऽभ्रवपुषे तडितम्बराय गुञ्जावतंसपरिपिच्छलसन्मुखाय ।
वन्यस्त्रजे कवलवेत्राविषाण वेणुलक्ष्मश्रिये मृदुपदे पशुपाङ्गजाय ।।

(श्रीमद्भागवतम् १०/१४/१)

श्रीमती राधिका परिचय:

अनयाऽराधितो नूनं भगवान हरिरीश्वर: ।
यन्नोविहाय गोविन्द: प्रीतो यामनयद् रह: ।।

(श्रीमद्भागवतम् १०/३०/२८)

सम्पादक:
श्रीपाद भक्ति वैभव पर्यटक महाराज
श्रीगौड़ीय मठ, बांद्रा (पूर्व), मुंबई.

## श्रीश्रीगुरुगौराङ्गौजयत:

# श्रीश्रीगौराङ्गस्मरणमङ्गलस्तोत्रम् ।

राहुग्रस्ते जडशशधरे फाल्गुने पूर्णिमायां गौडे शाके मनुशतमिते सप्तवर्षाधिके य: ।
मायापुर्यां समजनि शचि-गर्भसिन्धौ प्रदोषे तं चिच्छक्ति प्रकटित-तनुं मिश्रसूनुं स्मरामि ।।१।।

१-शक् सम्वत् १४०७ फाल्गुनी पूर्णिमा तिथि की संध्या काल में जब चन्द्रमा (जड़ससधरे) राहुग्रस्त हुए तब गौड़ देश के श्रीमायापुर धाम में श्री शचिदेवी के समुद्रतुल्य गर्भ में जिनका आविर्भाव हुआ उन्हीं चित्शक्ति द्वारा प्रकटित देह, श्रीजगन्नाथ मिश्र के पुत्र का मैं स्मरण करता हूँ ।

विश्वंभर प्रभु हरि द्विज गौरचन्द्र निम्बेश नामनिचय: क्रमतो वभूव ।
यस्यार्यखण्ड-मुकुटोपम गौडराष्ट्रे गौरं स्मरामि सततं कलिपावनं तम् ।।२।।

२-आर्यवर्त के मुकुट स्वरुप गौड़ राज्य में जिनके नाम विश्वम्भर महाप्रभु, गौरहरि द्विजराज गौरचन्द्र, निम्बेश (निमाई) इत्यादि (प्रभृतिं) लीला क्रम के अनुसार हुए, उन कलिपावन श्रीगौरचन्द्र का मैं सर्वदा स्मरण करता हूँ ।

अङ्गिकुर्वन् निजसुखकरीं राधिकाभावकान्तिं मिश्रावासे सुललितवपु गौरवर्णो हरि र्य: ।
पल्लीस्त्रीणां सुखमभिदधत् खेलयामास बाल्ये वन्देऽहं तं कनकवपुषं प्राङ्गणे रिङ्गमाणम् ।।३।।

३-निज सुखकारी श्रीराधिका का भाव एवं कान्ति ग्रहण हेतु अति ललित देह विशिष्ट गौर वर्ण वाले जिन श्रीहरि ने बाल्यकाल में श्रीजगन्नाथ मिश्र के भवन में पड़ोसी स्त्रीगण को अत्यधिक सुख प्रदान करने वाली क्रीड़ा (लीला) की, श्री शचिदेवी के आँगन में घुटने पर चलने वाले उन स्वर्ण कान्ति धारी शिशु की मैं वन्दना करता हूँ ।

सर्पाकृतिं स्वाङ्गनगं ह्यनन्तम् कृत्वासनं यस्तरसोपविष्ट: ।
तत्याज तञ्चात्मजनानुरोधात् विश्वंभरं तं प्रणमामि नित्यम् ।।४।।

४-जो अपने घर के आँगन में आए हुए सर्पाकार धारी श्रीअनन्त देव पर बलपूर्वक विराजमान हुए थे और सज्जनों के अनुरोध पर श्रीअनन्त देव को छोड़ दिया था उन्हीं श्रीविश्वम्भर को मैं नित्यकाल प्रणाम करता हूँ ।

बाल्ये श्रृण्वन् वदहरिमिति क्रन्दनादयन्निवृत्त स्तस्मात् स्त्रीणां सकलसमये नामगानं तदासीत् ।
मात्रे ज्ञानं विशदमवदन्मृत्तिकाभक्षणे य: वन्दे गौरं कलिमलहरं नाम-गानाश्रयं तम् ।।५।।

५-बाल्या वस्था में हरिबोल सुनकर जो क्रन्दन (रुदन) से निवृत्त हो जाते थे एवं इस हेतु उस ही समय सभी कार्यकलापों में स्त्रीगण हरिनाम का गान करती थीं, जिन्होंने मिट्टी-

सेवन (भक्षण) लीला द्वारा अपनी माँ को सुनिर्मल तत्व ज्ञान का उपदेश प्रदान किया था, उन्हीं कलिदोषहारी श्रीहरि नाम कीर्तन प्रवर्तक श्रीगौर हरि की मैं वन्दना करता हूँ ।

पौगण्डादौ द्विजगणगृहे चापलं यो वितन्वन् विद्यारंभे शिशुपरिवृतो जाह्नवीस्नानकाले ।
वारिक्षेपैर्द्विजकुलपतीन् चालयामास सर्वान् तं गौराङ्गं परमचपलं कौतुकीशं स्मरामि ।।६।।

६-विद्यारंभ काल तथा पौगंड वय काल के प्रारंभ में जिन्होंने ब्राह्मणों के घर में अनेक प्रकार की चपलता दिखाई एवं अन्य बालकों के साथ गंगा स्नान के समय जल प्रक्षालन द्वारा ब्राह्मण कुल प्रमुखगण को विचलित किया, उन्हीं अति चपल व परम हर्ष (आमोद) प्रदायक श्रीगौराङ्ग का मैं स्मरण करता हूँ ।

तीर्थ भ्रामिद्विजकुलमणे र्भक्षयन् पक्वमन्नं पश्चात्तं यो विपुलकृपया ज्ञापयामास तत्त्वम् ।
स्कन्धारोहीच्छलबहुतया मोहयामास चौरौ वन्देऽहं तं सुजनसुखदं दण्डदं दुर्जनानाम् ।।७।।

७-जिन्होंने तीर्थयात्रा पर निकले किसी ब्राह्मण श्रेष्ठ द्वारा बनाया अन्न भक्षण करने के उपरान्त विपुल कृपा पूर्वक उन ब्राह्मण को निजतत्व का ज्ञान प्रदान किया था एवं जिन्होंने दो चोरों के कंधों पर आरोहण करके छलावे से उन्हें भ्रमित व मोहित किया, सज्जनगण के आनंददाता व दुष्टगण के दण्डविधाता (श्रीगौरहरि) की मैं वन्दना करता हूँ।

आरुह्य पृष्ठं शिवभक्तभिक्षोः संकीर्त्य रुद्रस्य गुणानुवादम् ।
रेमे महानन्दमयो य ईश स्तं भक्तभक्तं प्रणमामि गौरम् ।।८।।

८-जिन प्रभु ने एक शिव भक्त भिक्षु के पीठ पर चढ़कर परम आनंदित हो कर रुद्र की गुणानुवाद संकीर्तन क्रीड़ा करवाई थी उन्हीं भक्ताधीन श्रीगौरचन्द्र को मैं प्रणाम करता हूँ ।

लक्ष्मीदेव्याः प्रणयविहितं मिष्टमन्नं गृहित्वा
तस्यै प्रादात् वरमतिशुभं चित्तसन्तोषणं यः ।
मस्याश्चिह्नैर्निजपरिजनान् तोषयामास यश्च
तं गौराङ्गं परमरसिकं चित्तचौरं स्मरामि ।।९।।

९-जिन्होंने श्रीलक्ष्मीप्रिय देवी द्वारा प्रीति पूर्वक प्रदत्त मिष्ठान्न ग्रहण करके चित्त संतोषकारी अति शुभ वरदान प्रदान किया था एवं जिन्होंने काली मसी (दवात) से स्वशरीर पर अंकित चिन्हों द्वारा अपने आत्मीय जनों को आनंदित किया था, उन्हीं परम रसिक चित्तचोर श्रीगौराङ्ग का मैं स्मरण करता हूँ ।

उच्छिष्टभाण्डेषु बसन् वराङ्गः मात्रेददौ ज्ञानमनुत्तमं यः ।
अद्वैतवीथीपथिकै रुपास्यं तं गोरचन्द्रं प्रणमामि नित्यम् ।।१०।।

१०-एक दिन जिन सुंदर पुरुष ने झूठे और टूटे बर्तन-भांडों के ढ़ेर के बीच में बैठ कर अपनी माँ को अद्वैतवाद के अनुगामियों का उपास्य (उच्छिष्ट-अनुच्छिष्ट समता सूचक) उत्तम ज्ञान प्रदान किया था मैं नित्यकाल उन्हीं श्रीगौरचन्द्र को प्रणाम करता हूँ ।

दृष्ट्वा तु मातुः कदनं स्वलोष्टैः तस्यै ददौ द्वे सितनारिकेले ।
वात्सल्यभक्त्या सहसा शिशु र्यः तं मातृभक्तं प्रणमामि नित्यम् ।।११।।

११-जिन शिशुने अपने द्वारा फेंके गये पत्थर से आहत माँ की पीड़ा दर्शन करने पर वात्सल्य भक्ति पूर्वक उनको सहसा दो शुभ्र नारियल फल ला कर दिए थे उन मातृभक्त श्रीगौरचन्द्र को मैं प्रणाम करता हूँ ।

संन्यासार्थं गतवति गृहादग्रजे विश्वरुपे मिष्टालापै र्व्यथितजनकं तोषयामास तूर्णम् ।
मातुः शोकं पितरि विगते सान्त्वयामास यश्च तं गौराङ्गं परमसुखदं मातृभक्तं स्मरामि।।१२।।

१२-ज्येष्ठ भ्राता श्रीविश्वरुप के सन्यास ग्रहण हेतु गृह परित्याग के पश्चात् पिता को मधुर वाक्यों द्वारा जिन्होंने शीघ्र परितुष्ट किया था और पिता के विगत होने के पश्चात् जिन्होंने शोक संतप्त जननी को सांत्वना दी थी उन्हीं परम सुखदाता मातृभक्त श्रीगौराङ्ग का मैं स्मरण करता हूँ ।

प्रेतक्षेत्रे द्विजपरिवृतः सर्वदेवप्रणम्यः मन्त्रं लेभे निजगुरुपुरी वक्त्रतो यो दशार्णम् ।
गौडं लब्ध्वा स्वमतिविकृतिच्छद्मनोवाच तत्त्वं तं गौराङ्गं नवरसपरं भक्तमूर्तिं स्मरामि।।१३।।

१३-जिन्होंने ग्रह यज्ञ (मख) के उद्देश्य से श्रीवल्लभाचार्य की पुत्री श्रीलक्ष्मीप्रिया देवी को इच्छा पूर्वक अंगीकार करके पूर्व देश (बांग्लादेश) गमन किया था और शास्त्रवृत्ति एवं विद्याचर्चा द्वारा प्रचुर धन अर्जन किया था उन्हीं गृहस्थ श्रेष्ठ धर्ममूर्ति स्वरुप श्रीगौराङ्ग का मैं स्मरण करता हूँ ।

विप्रपादोदकं पीत्वा यो बभूव गतामयः ।
वर्णाश्रमाचारपालं तं स्मरामि महाप्रभुम् ।।१४।।

१४-प्रभु से साध्य साधन तत्व विषय शिक्षा प्राप्त करने के पश्चात, सुजन (श्री) तपन मिश्रा जब नवद्वीप आना चाहते थे तब उनको वाराणसी भेज कर, स्वंय स्वदेश (नवद्वीप) आने के बाद, श्रीलक्ष्मीप्रिया देवी के विरह से शोक संतप्त जननी की तत्व युक्त और शांतिप्रद वचन द्वारा सांत्वना दी थी उन्ही शांति सुख दाता सौम्य मूर्ति श्रीगौराङ्ग देव का मैं स्मरण करता हूँ ।

लक्ष्मीदेवीं प्रणयविधिना वल्लभाचार्यकन्या मङ्गीकुर्वन् गृहमखपरः पूर्वदेशं जगाम ।
विद्यालापैर्बहुधनमहो प्राप यः शास्त्रवृत्ति स्तं गौराङ्गं गृहपतिवरं धर्ममूर्तिं स्मरामि।।१५।।

१५-जिन्होंने अपनी जननी का आदेश मानकर श्रीविष्णुप्रिया देवी को विवाह विधी सहित ग्रहण किये और गंगा तट पर अपने परिकरके साथ दिग्विजय पण्डित (केशव काश्मीरी) का दर्प नाश कर पंडित समाज के मणि स्वरुप नवद्वीप चन्द्ररुप लीला किये, समस्त विषय के अध्यापक गण के मध्य सिंह स्वरुप उन्हीं श्रीगौराङ्ग की मैं वंदना करता हूँ।

वाराणस्यां सुजनतपनं सङ्गमय्य स्वदेशं लब्ध्वा लक्ष्मीविरहवशतः शोकतप्तां प्रसूतिम् ।
तत्त्वालापैः सुखदवचनैः सान्त्वयामास यो वै तं गौराङ्गं विरतिसुखदं शान्तमूर्तिं स्मरामि।।१६।।

१६-जिन्होने नवद्वीप में विद्या विलास द्वारा समस्त द्विजगण, स्मार्त पंडित गण और न्याय पंडित व तांत्रिक गण को जीत कर विराजमान थे उन्हीं ज्ञान रुपी श्रीगौरचन्द्र को में प्रणाम करता हूँ ।

मातुर्वाक्यात् परिणयविधौ प्राप्यविष्णुप्रियां यः गङ्गातीरे परिकरजनैर्दिग्जितो दर्पहारी।
रेमे विद्वज्जनकुलमणिः श्रीनवद्वीपचन्द्रः वन्देऽहं तं सकलविषये सिंहमध्यापकानाम्।।१७।।

१७-जो (महाप्रभु) ब्राह्मण का चरणोदक पानकर रोग मुक्त हुऐ, वर्णाश्रम धर्म के आचार संरक्षक, उन्हीं श्रीमद्‌महाप्रभु का मैं स्मरण करता हूँ ।

विद्याविलासैर्नवखण्डमध्य सर्वान् द्विजान् यो विरराज जित्वा ।
स्मार्तांश्च नैयायिक-तान्त्रिकांश्च तं ज्ञानरुपं प्रणमामि गौरम् ।।१८।।

१८-प्रेततीर्थ गयाधाम में (ब्राह्मणगण द्वारा परिवृत) द्विजगण परिवेष्टित, जिन्होंने सकल देवगण द्वारा पूजित, निज गुरुदेव श्रीईश्वरपुरी पादके श्रीमुख से दश अक्षर मंत्र प्राप्त किया था एवं वहाँ (गया) से गौड़ देश लौटकर (आत्मतत्व प्रकाशित करने हेतु) निजमति विकार ग्रस्त होने का छलावा किया था, उन अद्‌भुत प्रेमी भक्त रुपी श्रीगौराङ्ग का मैं स्मरण करता हूँ ।

भक्त्यालापैर्निरवधि तदाद्वैतमुख्या महान्तः
प्राप्ता यस्याश्रयमतिशयं कीर्तनाद्यैर्मुरारेः ।
नित्यानन्दोदयसमयतो यो बभूवेशचेष्टः
वन्दे गौरं नयनसुखदं दक्षिणं षड्भुजं तम् ।।१९।।

१९-तब से (श्लोक १८ में वर्णित लीला काल में) महाप्रभु निरंतर श्रीहरि कीर्तनादि भक्ति विषयक चर्चा (में रत रहते थे) यह श्रवण कर भी अद्वैतादि प्रमुख महाजन गण परमाश्रम प्राप्त हुए थे । जो (महाप्रभु) श्रीनित्यानन्द प्रभु के प्रकाश के माध्यम से निज भगवत भाव प्रकट करने हेतु तत्पर हुए थे उन्हीं नयनानन्द दाता दयालु छः भुजाधारी श्रीगौरचन्द्र की मैं वंदना करता हूँ ।

यः कोलरुपधृगहो रमणीयमूर्ति र्गुप्ते कृपाञ्च महतीं सहसा चकार ।
तं व्यासपूजनविधौ बलदेवभावात् माध्वीकयाचनपरं परमं स्मरामि ।।२०।।

२०-अहो! श्रीवराहरुपधारी आराध्यस्वरुप जिन्होंने अकस्मात् श्रीमुरारी गुप्ता पर अतिशय कृपा की, श्रीव्यास पूजा विषय में श्रीबलराम के भावावेष हेतु मद्य माँगने वाले उन्हीं परमतत्व का मैं स्मरण करता हूँ ।

अद्वैतचन्द्रविभुना सगणेन भक्त्या नित्यञ्च कृष्णमनुना परिपूजितो यः ।
श्रीवासमन्दिरनिधिं परिपूर्णतत्त्वं तं श्रीधरादिमहतां शरणं स्मरामि ।।२१।।

२१-भक्तगण सहित प्रभु अद्वैतचन्द्र जिनकी सर्वदा भक्ति सहित कृष्णमंत्र से पूजा करते हैं, श्रीवास मंदिर के निधि, श्रीधर आदि महाजन के आश्रयरुप परिपूर्णतत्व, उन्हीं श्रीगौरसुंदर का मैं स्मरण करता हूँ ।

श्रीवासपाल्यं यवनं विशोध्य चक्रे सुभक्तं स्वगुणं प्रदर्श्य ।
प्रेम्ना समुत्तं विषयाद्विरक्तं यस्तं प्रभुं गौरविधुं स्मरामि ।।२२।।

२२-प्रेम से महामत्त, विषय से विरक्त जिन्होंने निज महिमा प्रदर्शन हेतु श्रीवास पतित (दर्जी) यवन को (शोधन) शुद्धिकरण कर उन्हें उत्तम भक्त बनाया, उन्हीं ईश्वर श्रीगौरचन्द्र का मैं स्मरण करता हूँ ।

श्रीरामरुपधृगहो भिषजो मुरारेः श्रुत्वा स्तवं रघुपतेर्मुदमाप यो वै ।
चक्रे कुसङ्गरहितं कृपया मुकुन्दं तं शुद्धभक्तिरसदातिवरं स्मरामि ।।२३।।

२३-अहो! श्रीराम स्वरुप धारण कर वैद्य श्रीमुरारी गुप्ता का रघुनाथ स्तव श्रवण कर जो परम आनंदित हुए, कृपावशतः मुकुन्द को कुसंग से छुड़ाया, उन्हीं श्रेष्ठ शुद्ध भक्ति दाता श्रीगौराङ्ग देव का मैं स्मरण करता हूँ ।

आज्ञापयच्च भगवानवधूतदासौ नामानि गोकुलपते र्नगरेषु दातुम् ।
सर्वत्रजीवनिचयेषु परावरेषु यस्तं स्मरामि पुरुषं करुणावतारम् ।।२४।।

२४-जिन भगवान ने नगर-नगर सर्वत्र उत्तम और अधम सकल जीव को गोकुलपति श्रीकृष्ण के नाम समूह का वितरण हेतु अवधूतचन्द्र श्री श्रीनित्यानन्द प्रभु और ठाकुर श्रीहरिदास को आज्ञा दी थी, उन्हीं करुणावतार ईश्वर श्रीगौराङ्ग का मैं स्मरण करता हूँ ।

योऽद्वैतसद्मविचलन् सह चाग्रजेन संन्यासधर्मरहितं ध्वजिनं सुरापम् ।
तत्त्वं विशुद्धमवदत् ललिताख्यपुर्यां तं शुद्धभक्तिनिलयं शिवदं स्मरामि ।।२५।।

२५-और, जिन्होंने ज्येष्ठ श्रीनित्यानन्द के साथ शांतिपुर में स्थित श्रीअद्वैत गृह गमन काल में ललितपुर नामक गाँव में सुरा पीने वाले सन्यास धर्म रहित एक कपटी सन्यासी को विशुध्द तत्त्व उपदेश किये थे, उन्हीं शुद्ध भक्ति का आश्रय एवं मंगलदाता श्रीगौरचन्द्र का मैं स्मरण करता हूँ ।

अद्वैतवादशठताश्रितदेशिकस्य पृष्ठं व्यताडयदहो सहसा हरि र्यः।
प्रेम्नापि भक्तिपथगञ्च चकार तं तं मायाहरं सुविमलं सततं स्मरामि।।२६।।

२६-जिन्होंने अद्वैत आचार्य जब कपटरुपी अद्वैतावाद के प्रचारक बने तब उनकी पीठपर कृपा कर के कराघात किया था और उनका प्रेम के बल से उन्हें भक्ति पथपर पुनः लाया था, सुविमल एवं मायावाद के भ्रम के हरता उन्ही भगवान् श्रीगौराङ्ग का नित्य मैं स्मरण करता हूँ ।

श्रीरुपधृग्भजनसागरमग्ननृभ्यो यश्चन्द्रशेखरगृहे प्रददौ स्वदुग्धम्।
स्वां दर्शयन् विजयमुद्धरति स्म भूतिं तं सर्व शक्तिविभवाश्रयणं स्मरामि।।२७।।

२७-जिन्होंने चद्रशेखर के गृह मे लक्ष्मीदेवी का रुप धारण किया था और वहाँ उपस्थित भजन के सागर मे डूबे हुये भक्तों को अपना दूध पिलाया था और अपना वैभव दिखाकर विजयदास का उद्धार किया था, समस्त अप्राकृत शक्तियों एवं वैभव का आश्रय उन्ही भगवान् श्रीगौराङ्ग का मैं स्मरण करता हूँ ।

निद्रात्यागः स्नपनमशनं गोद्रुमादौ विहारो
ग्रामे ग्रामे विचरणमहो कीर्तनञ्चाल्पनिद्रा ।
यामे यामे क्रमनियमतो यस्यभक्तै र्वभूवु
स्तं गौराङ्गं भजनसुखदं ह्यष्टयामं स्मरामि ।।२८।।

२८-जिन्होंने गोद्रुम एवं अनेक अन्य गाँवो में अपने भक्तों के सहित विचरण किया था, जहाँ प्रहर प्रहर क्रम से अनेक लीलायें सम्पन्न की थी, निद्रा त्याग, स्नान, भोजन, नित्य कीर्तन और कदाचित निद्रा, भक्ति के आनन्द के प्रदाताउन्ही भगवान् श्रीगौराङ्ग का अष्ट प्रहर मैं स्मरण करता हूँ ।

यो वै संकीर्तनपरिकरैः श्रीनिवासादिसङ्घै स्तत्रत्यानां पतितजगदानन्दमुख्यद्विजानाम्।
दुर्वृत्तानां हृदयविवरं प्रेमपूर्णं चकार तं गौराङ्गं पतितशरणं प्रेमसिन्धुं स्मरामि।।२९।।

२९-श्रीनिवासादि संकीर्तन अनुयायियों के सहित जिन्होंने वहाँ (श्रीनवद्वीप) के जगदानन्द विप्र एवं अनेक अन्य.पतित एवं दुष्ट ब्राह्मणों के हृदयकन्दरों का भगवत् प्रेम से पूर्ण किया था, पतितों के शरण एवं प्रेम के सिन्धु उन्ही भगवान् श्रीगौराङ्ग का मैं स्मरण करता हूँ ।

भावावेशैर्निखिलसुजनान् शिक्षयामास भक्तिं
तेषां दोषान् सदयहृदयो मार्जयामास साक्षात् ।
भक्तिंव्याख्यां सुजनसमितौ यो मुकुन्दश्चकार
तं गौराङ्गं स्वजनकलुषक्षान्तिमूर्तिं स्मरामि ।।३०।।

३०-स्वयं भावावेशित होकर जिन्होंने समस्त भक्तों को भक्ति की शिक्षा दी थी, हृदय से दयालु होकर जिन्होंने समस्त भक्तों के दोषों का परिमार्जन किया था, मुक्ति के प्रदाता जिन्होंने साधुसभा मे भक्ति का व्याखान किया था, अपने भक्तों के दोषों को क्षमा करने की साक्षात मुर्ति उन्ही भगवान् श्रीगौराङ्ग का मैं स्मरण करता हूँ ।

यो वै संकीर्तनसुखरिपु चान्दकाजीं विशोध्य लास्योल्लासैर्नगरनिचये कृष्णगीतं चकार।
वारंवारं कलिगदहरं श्रीनवद्वीपधाम्नि तं गौराङ्गं नटनविवंश दीर्घबाहुं स्मरामि।।३१।।

३१-जिन्होंने सकीर्तन के आनन्द का विरोध करने वाले शत्रु चाँदकाजी का उद्धार कर, श्रीनवद्वीप धाम के नगरों में उल्लासित नृत्य के साथ कलि के रोग को हरने वाला कृष्ण के दिव्य नामों का कीर्तन बारम्बार किया था, नृत्य में निमग्न दीर्घ बाहुऔ वाले उन्ही भगवान् श्रीगौराङ्ग का मैं स्मरण करता हूँ ।

गङ्गादासो मुररिपुभिषक् श्रीधरः शुक्लवस्त्रः सर्वे यस्य प्रणतिनिरताः प्रेमपूर्णा बभूवुः।
यस्योच्छिष्टाशनसुरतिका श्रीलनारायणी च तं गौराङ्गं परमपुरुषं दिव्यमूर्तिं स्मरामि।।३२।।

३२-गंगादास, वैद्यमुरारी गुप्त, श्रीधर और शुक्लाम्बर ब्रह्मचारी ये सभी जिनके आदर में प्रवृत होकर प्रेमपूर्ण हुए थे और श्रीमती नारायणी जिनका उच्चिष्ट सेवन कर हर्षित हुइ थी दिव्यमुर्ति एवं पुरुषों में परम उन्हीं श्रीगौराङ्ग का मैं स्मरण करता हूँ ।

श्रीवासस्य प्रणयविवशस्तस्य सूनोर्गतासोर्वक्त्रात्तत्त्वं परमशुभदं श्रावयामास तस्मै।
तद्दासेभ्योऽपिच शुभमतिं दत्तवान् यः परात्मा वन्दे गौरं कुहकरहितं जीवनिस्तारकं तम्।।३३।।

३३-जिन परमेश्वर ने श्रीवास ठाकुर के प्रेम से विवश होकर उनके मृत पुत्र के मुँह से परम शुभद तत्त्व उन्ही को सुनवाया था और उनके दासों को भी शुभ मनोभाव प्रदान किया था, छल कपट से दूर एवं जीवों के उद्धारक उन्हीं भगवान् श्रीगौराङ्ग का मैं स्मरण करता हूँ ।

गोपीभावात् परमविवशो दण्डहस्तः परेशोवादासक्तानतिजडमतीन् ताडयामास मूढान्।
तस्मात्ते यत् प्रतिभटतया वैरभावानतन्वन् तं गौराङ्गं विमुखकदने दिव्यसिंहं स्मरामि।।३४।।

३४-दिव्य प्रेम में गोपियों की तरह भावविभोर होने परवादविवाद में आसक्त एवं बुद्धिरहित मूढ़व्यक्तियोंके उनकी निन्दा करने पर उन व्यक्तियों के हाथों में डण्डे द्वारा

जिन्होंने दण्डित किया था, कारण स्वरुप प्रतिद्वन्दी भाव से उन व्यक्तियों ने जिनकी शत्रुता अपनायी थी, स्वयंसे प्रतिकूल होने वालों का दमन करने के लिए दिव्यसिंह रुप धारी उन्हीं भगवान् श्रीगौराङ्ग का मैं स्मरण करता हूँ ।

तेषां पापप्रशमनमतिः कण्टके माघमासे लोकेशाक्षिप्रमवयसि यः केशवान्यासलिङ्गम्।
लेभे लोके परमविदुषां पूजनीयोवरेण्यस्तं चैतन्यं कचविरहितं दण्डहस्तं स्मरामि।।३५।।

३५-उन्हीं मूढ व्यक्तियों के पापों का निवारण करने के लिए जगत में परम पण्डित गण के पूजनीय जिन श्रेष्ठ पुरुष ने चौबीस वर्ष की उम्र में कटवा नगर में माघ महिने में श्रीकेशव भारती से सन्यास ग्रहण किया था, केशरहित एवं दंडाधारी उन्हीं श्रीकृष्ण चैतन्य का मैं स्मरण करता हूँ ।

त्यक्त्वा गेहं स्वजनसहितं श्रीनवद्वीपभूमौ नित्यानन्दप्रणयवशगः कृष्णचैतन्यचन्द्रः।
भ्रामं भ्रामं नगरमगमच्छान्तिपूर्वं पुरं यस्तं गौराङ्गं व्रजजिगमिषाविष्टमूर्तिं स्मरामि।।३६।।

३६-नवद्वीप में स्थित अपने गृह एवं स्वजनों को त्यागने के पश्चात जिन कृष्ण चैतन्यचन्द्र ने श्रीनित्यानन्द के प्रेम में वशीभूत होने के कारण उन पर विश्वास कर घूमते घूमते शांतिपुर नगर में पहुँच गए थे, व्रजधाम में जाने की अभिलाषा से पूरित उन्हीं भगवान् श्रीगौराङ्ग का मैं स्मरण करता हूँ ।

तत्रानीतात्वजितजननी हर्षशोकाकुला सा भिक्षां दत्वा कतिपयदिवा पालयामास सूनुम्।
भक्त्या यस्तद्विधिमनुसरन् क्षेत्रयात्रां चकार तं गौराङ्गं भ्रमणकुशलं न्यासिराजं स्मरामि।।३७।।

३७-हर्ष और शोक से आकुल श्रीगौर सुंदर की जननी श्रीशचीदेवी को वहाँ (शांतिपुर नगर) लाने के पश्चात् उन्होंने (जननी ने) कई दिनों तक भिक्षा दान कर के पुत्र का पालन-पोषण किया था, जननी द्वारा दिए गए आदेश का भक्ति पूर्वक अनुसरण करते हुए जिन्होंने श्रीक्षेत्र पूरी की यात्रा की थी, भ्रमण में निपुण एवं संन्यासियों में सम्राट उन्हीं भगवान् श्रीगौराङ्ग का मैं स्मरण करता हूँ ।

नित्यानन्दो विबुधजगदानन्द दामोदरौ च लीलागाने परमनिपुणो दत्तसूतो मुकुन्दः।
एते भक्ताश्चरणमधुपा येन सार्द्धं प्रचेलुस्तं गौराङ्गं प्रणतपटल प्रेष्ठमूर्तिं स्मरामि।।३८।।

३८-श्रीनित्यानन्द प्रभु, पण्डित श्रीजगदानन्द और श्रीदामोदर, और भगवान् की लीलाओं का कीर्तन करने में परम निपुण दत्तवंशज मुकुन्द, इन सब अनुरागी, भँवरों की भाँति भगवान् के चरण कमलों के मधु का पान करने वाले भक्तों के साथ जिन्होंने (श्रीक्षेत्र की) यात्रा की थी, प्रणत भक्तों की परमप्रिय मुर्ति उन्हीं भगवान् श्रीगौराङ्ग का मैं स्मरण करता हूँ ।

त्यक्त्वा गङ्गातटजनपदां श्राम्बुलिङ्गं महेशं ओढ्रे देशे रमणविपिने क्षीरचौरं ददर्श।
गोपालं वै कटकनगरे यो ददर्शात्मरुपं तं गौराङ्गं स्वभजनपरं भक्तमूर्तिं स्मरामि।।३९।।

३९-जिन्होंने गंगा के तीर पर स्थित ग्राम समूह एवं (छत्र भाग में) श्रीअम्बुलिगं शिव को पीछे छोड कर, उत्कल देश के रमणीय बागानों (रेमुना) में श्रीखीरचोरगोपीनाथ और कटक नगर (कटवा) में स्वयं स्वरुप साक्षीगोपाल का दर्शन किया था, उन्हीं भक्तरुप धारी और स्वयं को भजन में परायण भगवान् श्रीगौराङ्ग का मैं स्मरण करता हूँ ।

एकाम्राख्ये पशुपतिवने रुद्रलिङ्गं प्रणम्य यातः कापोतकशिवपुरं स्वस्यदण्डं विहाय।
नित्यानन्दस्तु तदवसरे यस्यदण्डं बभञ्ज तं गौराङ्गं कपटमनुजं भक्तभक्तं स्मरामि।।४०।।

४०-श्रीमहाप्रभु भगवान् शिव को समर्पित एकाम्र नामक वन में शिवलिंग को प्रणाम कर जब कापोतक नामक शुभ नगर (कमलपुर) में पहुँचे और अपना डण्डा रखा तब उसी अवसर पर श्रीनित्यानन्द ने उनके डण्डे का भंग किया था, मनुष्यवेश धारी एवं निजभक्तों के भक्त उन्हीं भगवान् श्रीगौराङ्ग का मैं स्मरण करता हूँ ।

भग्ने दण्डे कपटकुपितस्तान् विहाय स्ववर्गानेकोनीलाचलपतिपुरं प्राप्य तूर्णं प्रभुर्यः।
भावावेशं परममगमत् कृष्णरुपं विलोक्य तं गौराङ्गं पुरटवपुषं न्यस्तदण्डं स्मरामि।।४१।।

४१-श्रीमहाप्रभु ने डण्डा के भग्न होने पर क्रुद्ध होने का ढोंग किया और अपने पार्षदों को छोड़ कर शीघ्रता से जगन्नाथपुरी अकेले पँहुचे । वहाँ पर भगवान् कृष्ण के रुप (श्रीजगन्नाथ) के दर्शन पर वे अत्याधिक भावाविष्ट हुए थे, स्वर्णमय देहधारी एवं डण्ड त्यागी उन्हीं भगवान् श्रीगौराङ्ग का मैं स्मरण करता हूँ ।

भावास्वादप्रकटसमये सार्वभौमस्य सेवा तस्यानर्थान् प्रकृतिविपुलान् नाशयामास सर्वान्।
तस्माद् यस्य प्रबलकृपया वैष्णवोऽभूत् स चापि तं वेदार्थ प्रचरणविधौ तत्त्वमूर्तिं स्मरामि।।४२।।

४२-जब भगवान् श्रीगौराङ्ग भगवत् प्रेम का आस्वादन कर रह थे और भावों की अभिव्यक्ति हो रही थी, तब श्रीसार्वभौम ने उनकी सेवा की थी और उस सेवा से उनके (श्रीसार्वभौम के) स्वभाव में स्थित सारे भौतिक अनर्थों का नाश हुआ था और महाप्रभु की परम कृपा पाकर वे (श्रीसार्वभौम) वैष्णव बन गए, वेदों के अर्थों के प्रचारक एवं तत्त्वों की मुर्ति स्वरुप उन्हीं भगवान् श्रीगौराङ्ग का मैं स्मरण करता हूँ ।

तत्रोषित्वा कतिपयदिवा दाक्षिणात्यं जगाम कूर्मक्षेत्रे गदविरहितं वासुदेवं चकार।
रामानन्दे विजयनगरे प्रेमसिन्धुं ददौ य स्तं गौराङ्गं जनसुखकरं तीर्थमूर्तिं स्मरामि।।४३।।

४३-जिन्होंने नीलाचल धाम में कुछ दिन निवास करने के पश्चात् दक्षिण भारत यात्रा की थी, श्रीकुर्मक्षेत्र में विप्र वासुदेव को कुष्ठ रोग से मुक्त किया था, विजयनगर में श्रीरामानन्द को प्रेमसिंधु समर्पण किए थे, वही जनसुखदाता तीर्थ-विग्रह स्वरुप श्रीगौराङ्ग का मैं स्मरण करता हूँ ।

देशे देशे सुजननिचये प्रेमविस्तारयन् यो
रङ्गक्षेत्रे कतपियदिवा भट्टपल्ल्यामवात्सीत् ।
भट्टाचार्यान् परमकृपया कृष्णभक्तांश्चकार
तं गोपालालयसुखनिधिं गौरमूर्तिं स्मरामि।।४४।।

४४-जिन्होंने देश-देश भ्रमण कर सज्जन मध्य प्रेम विस्तार करने की दौरान श्रीरङ्गम में श्रीवेङ्कट भट्ट के गृह में कुछ दिन निवास किया था एवं परम कृपापूर्वक भट्टाचार्य गण को कृष्ण भक्त बनाया था, श्रीगोपाल भट्ट गृह के सुख विधाता उन्हीं श्रीगौराङ्ग मूर्ति का मैं स्मरण करता हूँ ।

बौद्धान् जैनान् भजनरहितान् तत्त्ववादाहतांश्च
मायावादहृदनिपतितां शुद्धभक्तिप्रचारैः ।
सर्वांश्चैतान् भजनकुशलान् यश्चकारात्मशक्त्या
वन्देऽहं तं बहुमतधियां पावनं गौरचन्द्रम् ।।४५।।

४५-जिन्होंने शुद्ध भक्ति प्रचार द्वारा और निज प्रभाव से तत्व वाद विच्युत तत्व वादीगण (या तत्व विचार विषय में सम्पूर्ण पराजित) तथा बौद्ध, जैन, भजनहीन, अवैयक्तिक मायावाद दर्शन की झील में पतितगण-इन सभी को निपुण भक्त बनाए थे, विभिन्न मानसिक अटकलों में प्रविष्टगण के परित्राता उन्हीं श्रीगौराङ्ग का मै स्मरण करता हूँ ।

दत्वानन्दं कलिमलहरं दाक्षिणात्येभ्य ईशो नीत्वा ग्रन्थौ भजनविषयौ कृष्णदासेन सार्द्धम्।
आलालेशालयपथगतं नीलशैलं ययौ य स्तं गौराङ्गं प्रमुदितमतिं भक्तपालं स्मरामि।।४६।।

४६-जो प्रभु दक्षिण देश वासीगण को कलिदोष नाशकारी प्रेमानन्द वितरण कर भजन से संबंधित दो ग्रंथ (ब्रह्म संहिता और कृष्ण कर्णामृत) साथ में लेकर कालाकृष्णदास सहित श्रीआलालनाथ मंदिर का पथ के माध्यम से नीलाचल में गमन किया था उन्हीं अति हर्षित भक्त रक्षक श्रीगौराङ्ग का मैं स्मरण करता हूँ ।

काशीमिश्रद्विजवरगृहे शुद्धचामीकराभो वासञ्चक्रे स्वजननिकरै र्यः स्वरुपप्रधानैः।
नामानन्दं सकल समये सर्वजीवाय योऽदात् तं गौराङ्गं स्वजनसहितं फुल्लमूर्तिं स्मरामि।।४७।।

४७-विशुद्ध स्वर्णकांति विशिष्ठ जिन ब्राह्मण श्रेष्ठ श्रीकाशी मिश्र के गृह में स्वरुप दामोदर प्रमुख निज गण के साथ निवास किए थे; जिन्होंने सर्वदा सर्व जीव को नामानन्द प्रदान किया था, स्वजन सहित प्रफुल्ल मूर्ति उन्हीं श्रीगौराङ्ग का मैं स्मरण करता हूँ ।

नीलागेशो रथमधिगते वैष्णवे र्य स्तदग्रे
नृत्यन् गायन् हरिगुण-गणं प्लावयामास सर्वान् ।
प्रेम्नौढ्रीयान् गजपति मुखान् सेवकान् शुद्धभक्तां
स्तं गौराङ्गं स्व सुखजलधिं भावमूर्तिं स्मरामि ।।४८।।

४८-जब श्रीनीलाद्रिनाथ रथ पर अधिष्ठित हुए तब वैष्णव गण के साथ नृत्य और हरिगुण गान कर शुद्ध भक्त और सेवक राजा गजपति-प्रमुख उत्कल वासीगण, को प्रेम से प्लावित किए थे, स्वसुख-समुद्र मूर्तिमान भावस्वरुप उन्हीं श्रीगौराङ्ग का मैं स्मरण करता हूँ ।

ओढ्रदेशाद् ययौ गौडं सीमायामुत्कलस्ययो ।
हित्वौढ्रपार्श्वदां देवस्तं स्मरामि शचिसुतम् ।।४९।।

४९-जिन प्रभुने उत्कल देशी भक्तगण को उत्कल देश की सीमा मध्य रख कर गौड़ देश में गमन किया था, उन्हीं श्रीशचिनन्दन का मैं स्मरण करता हूँ ।

श्रीवासं वासुदेवञ्च राघवं स्व स्व मन्दिरे ।
दृष्ट्वा शान्तिपुरं यातो यस्तं गौरं स्मराम्यहम् ।।५०।।

५०-जिन्होंने श्रीवास, वासुदेव और राघव पण्डित को निज निज गृह पर दर्शन करने के बाद शांतिपुर में गए थे, उन्हीं श्रीगौराङ्ग का मैं स्मरण करता हूँ ।

श्रीविद्यानगरं गच्छन् विद्यावाचस्पते र्गृहम् ।
कुलियायां नवद्वीपे ययौ यस्तमहं भजे ।।५१।।

५१-जिन्होंने श्रीविद्यानगर में विद्यावाचस्पती के गृह में जा कर नवद्वीप अंतर्गत श्रीकोलद्वीव (या कूलिया) में गए थे, उन्हीं श्रीगौराङ्ग का मैं स्मरण करता हूँ ।

विद्यारुपोद्भवधनजनैर्यानलभ्या नरेण तां चैतन्यप्रभुवरकृपां दैन्यभावादवाप।
देवानन्दः कुलियनगरे यस्य भक्तान् प्रपूज्य वन्दे गौरं विमदविदुषां शुद्धभक्त्यैकलभ्यम् ।।५२।।

५२-विद्या, रुप, जन्म, धन और ज्ञान - इसके द्वारा मनुष्य जो प्राप्त नहीं कर सकते हैं, श्रीचैतन्य महाप्रभु की कृपा से कुलीयानगर के देवानन्द पण्डित जिनका भक्तगण की पूजा कर प्राप्त हुए थे, उन्ही श्रीगौरचन्द्र का मैं स्मरण करता हूँ, जो केवल निरहंकार पण्डित गण की भक्ति द्वारा प्राप्त होते हैं ।

वृन्दारण्येक्षणकपटतो गौडदेशे प्रसूतिं दृष्ट्वा स्नेहाद् यवनकबलात् साग्रजं रुपमेव।
उद्धृत्यौढ्रं पुनरपि ययौ यः स्वतन्त्रः परात्मा तं गौराङ्गं स्वजनतरणे हृष्टचित्तं स्मरामि।।५३।।

५३-जिन स्वतंत्र परमेश्वर वृन्दावन दर्शन के बहाने गौड़ देश में निज, जननी को दर्शन पूर्वक कृपावशतः यवन बादशाह हुसैन शाह के चगुंल से अग्रज श्रीसनातन के साथ श्रीरुप को मुक्त कर उत्कल देश में वापस लौटे थे, स्वजन तारक हर्षित चित्त उन्हीं श्रीगौराङ्ग का मैं स्मरण करता हूँ ।

सङ्गंहित्वा बहुविधनृणां भद्रमेकं गृहित्वा यात्रां वृन्दावनदृढमतिर्यश्चकारात्मतन्त्रः।
ऋक्षव्याघ्रप्रभृतिकपशून् मादयित्वात्मशक्त्या तं स्वानन्दैः पशुमतिहरं गौरचन्द्रं स्मरामि।।५४।।

५४-जो आत्म तंत्र पुरुष वृन्दावन दर्शन के लिए दृढ़मति होकर नाना प्रकार लोगों का संग परित्याग पूर्वक एक मात्र बलभद्र भट्टाचार्य को साथ में लेकर व्याघ्र, भालू आदि पशुगण को आत्मशक्ति बल से उन्मत्त कर गमन किए थे, निजआनन्द द्वारा पशुगण के चित्तहारी उन्हीं श्रीगौरचन्द्र का मैं स्मरण करता हूँ ।

वृन्दारण्ये गिरिवरनदीन्ग्रामराजीं विलोक्य पूर्व क्रीडास्मरणविवशो भावपुञ्जैर्मुमोह।
तस्माद्भद्रो व्रजविपिनश्चालयामास यश्च तं गौराङ्गं निजजनवशं दीनमूर्तिं स्मरामि।।५५।।

५५-महाप्रभु श्रीवृन्दावन में गोवर्धन गिरी, यमुना नदी और (नन्द गाँव, वृषभानु पुर इत्यादि) ग्राम समूह दर्शन करने की दौरान पुर्व लीला स्मरण करते हुए भाव विह्वल हो कर मूर्छित होने लगे । उसी हेतु बलभद्र जिनको बज्र विपिन से स्थानांतरित किए थे उन्हीं निज जन वशीभूत, दीनमूर्ति श्रीगौराङ्ग का मैं स्मरण करता हूँ ।

भाववावेशं पथिपरमहोवीक्ष्य तं भाग्यवन्तो म्लेच्छाः केचिच्छुमतिभबलाल्लेभिरे यत् प्रसादम्।
भक्तास्ते च प्रणयवशगा यत् प्रसादाद् बभूवुस्तं गौराङ्गं जनिमलहरं शुद्धमूर्तिं स्मरामि।।५६।।

५६-अहो! मार्ग में कई भाग्यवान म्लेच्छ (वर्णाश्रमहीनजाति) जिनका वही परम भावावेष के दर्शन उत्तम शुभमति से उनकी कृपालाभ कर भक्त हो गए थे, जाति दोष हारी अप्राकृत (पारलौकिक) देहधारी उन्हीं श्रीगौराङ्ग देव का मैं स्मरण करता हूँ ।

पुण्ये गङ्गांतपनतनया सङ्गमे तीर्थवर्ये रुपं विद्यां पररसमयीं शिक्षयामास यो वै।
प्रेमाणं गोकुलपतिगतं वल्लभाख्यं बुधश्च तं गौराङ्गं रसगुरुमणिं शास्त्रमूर्तिं स्मरामि।।५७।।

५७-जिन्होंने तीर्थ श्रेष्ठ पुण्य गंगा-यमुना संगम स्थल-प्रयाग में श्रीरुप को सबसे ऊंचा प्रेमरस की पूर्णज्ञान एवं वल्लभ भट्ट नामक पण्डित को गोकुलनाथ श्रीकृष्ण की प्रेम शिक्षा दी थी, सर्वश्रेष्ठ रसशिक्षक, शास्त्र के मूर्ति स्वरुप उन्हीं श्रीगौराङ्ग का मैं स्मरण करता हूँ ।

काशीक्षेत्रे रसविरहितान् केवलाद्वैतपक्षान् प्रेम्नाप्लाव्य स्वजनकृपया यस्तु रुपाग्रजाय।
विष्णोर्भक्तिस्मृतिविरचने साधुशक्तिं व्यतारीत् वन्दे गौरं भजनविषये साधकानां गुरुं तम्।।५८।।

५८-जिन्होंने काशी क्षेत्र में निजजन प्रति कृपावशतः रसज्ञान हीन केवलाद्वैतवादी गण को प्रेम की बाढ़ लाकर सम्पूर्ण रुप से प्लावित किए थे और श्रीरुप के अग्रज श्रीसनातन को श्रीहरि भक्ति अर्थात् सेवा विषयक स्मृति शास्त्र रचना में उत्तम रुप शक्ति संचार किए थे, भजन विषय में साधकगण के गुरु उन्हीं श्रीगौराङ्ग की मैं वन्दना करता हूँ ।

धिक् गौराङ्गंप्रणतिरहितां शुष्कतर्कादिदग्धानित्यारभ्यप्रचुरवचनं शाङ्कराणां बभूव।
न्यासीशानां सदसि महतां यस्य पूजा तदाभृत् गौराङ्गं तं स्वसुखमथनानन्दमूर्तिं स्मरामि।।५९।।

५९-तदाकाले शंकर मतावलंबी विख्यात प्रधान संन्यासीगण की सभा में श्रीगौराङ्ग प्रणति रहीत शुष्क तर्कादि दग्ध भक्तोंगण को धिक, इस प्रकार प्रचुर वचन द्वारा मायावादी सन्यासीगण का धिक्कार हुई थी और जिनकी पूजा/अर्चना हुई थी उन्हीं प्रेमानन्द की मूर्ति श्रीगौराङ्ग का मैं स्मरण करता हूँ ।

प्राप्यक्षेत्रं पुनरपि हरिर्भक्तवर्गं तुतोष रामानन्दप्रमुखसुजनान् सार्वभौमादिकान् यः।
प्रेमालापैर्हरिरसपरैर्यापयामास वर्षान् तं गौराङ्गं हरिरसकथास्वादपूर्णं स्मरामि।।६०।।

६०-जिन श्रीहरी ने पुनः श्रीक्षेत्र पहुँच कर राय रामानन्द-प्रमुख सज्जन सहित वासुदेव सार्वभौम-आदि भक्तगण को हर्षित किया था और कृष्ण रस-प्रधान स्नेह पूर्ण अलाप सहित अवशेष प्रकटकाल बीतये थे, उन्ही कृष्ण रसमय कथा आस्वादन पूर्ण श्रीगौराङ्ग का मैं स्मरण करता हूँ ।

यत्पादाब्जं विधिशिवनुतं वीक्षितुं ते महान्तो वर्षे वर्षे रथपरिगतौ गौडदेशात् समेत्य।
प्रीतिं लब्ध्वा मनसि महतीमोढ्रदेशात् समीयुर्गौडीयानां परमसुहृदं तं यतीन्द्रं स्मरामि।।६१।।

६१-जिनका ब्रह्मा-शिव-वन्दित पाद पद्म दर्शन के लिये बंगदेश से महाजन समूह हर वर्ष रथयात्रा के अवसर पर समागत होते थे और हृदय में परम आनंद लाभ कर उत्कल देश से वापस लौटें थे, गौड़ीय गण के परम सुहृद उन्हीं (श्रीचैतन्य) सन्यासी वर का मैं स्मरण करता हूँ ।

निर्विण्णानां विपुलपतनं स्त्रीषु संभाषणं यत् तत्तद्दोषात् स्वमतचरकारक्षणार्थं य ईशः।
दोषात् क्षुद्रादपि लघुहरिं वर्जयित्वा मुमोद तं गौराङ्गं विमलचरितं साधुमूर्तिं स्मरामि।।६२।।

६२-निर्वाण प्राप्त संन्यासीगण के लिए स्त्रीलोक संभाषण महापतन के कारण इस प्रकार दोष से निज मतानुगामी जन के संरक्षण हेतु जो प्रभु सामान्य अपराध के लिये छोटे-

हरिदास को छोड़ कर संतुष्ट हुए थे (अर्थात् दु:खी नहीं हुए), विमल-चरित साधुमूर्ति उन्हीं श्रीगौराङ्ग का मैं स्मरण करता हूँ ।

दैवाद्धीनान्वयजनिवतां तत्त्वबुद्धिप्रभावादाचार्यत्वं भवति यदिदं तत्त्वमेकं सुगूढम्।
प्रद्युम्नाय प्रचुरकृपया ज्ञापयामास यस्तत् तं गौराङ्गं गुणमधुकरं जाड्यशून्यं स्मरामि।।६३।।

६३-अंतीत कर्म हेतु जिन लोगों ने निम्न जाति कुल में जन्म लाभ करते हैं तत्व ज्ञान प्रभाव द्वारा उन्हीं लोगों का भी आचार्यत्व सिद्ध हो सकता है । इस गूढ़ तत्व का जिन्होंने प्रचुर कृपावशत: श्रीप्रद्युम्न मिश्र को सूचित किए थे, मूढ़ जड़ विचार रहित मधुकर सदृश गुणग्राही उन्हीं श्रीगौराङ्ग का मैं स्मरण करता हूँ ।

वात्सल्येन स्वभजनवशात् दासगोस्वामिनं यस्तत्त्वज्ञानं भजनविषये शिक्षयामास साक्षात्।
सिन्धोस्तीरे चरमसमये स्थापयामास दासं तं गौराङ्गं स्वचरणजुषां बन्धुमूर्तिं स्मरामि।।६४।।

६४-श्रीरघुनाथदास गोस्वामी का निज भजन दर्शन द्वारा वशीभूत हो कर उन्हीं गोस्वामी कों जिन्होंने वात्सल्य सहित भजन विषयक तत्वज्ञान स्वयं शिक्षा दिए थे, और अंतिम काल में श्रीहरिदास को जिन्होंने स्नेह पूर्वक स्वयं समुद्रतट पर समाधिष्ठ किया था, स्वचरण सेवकगण के बंधु मूर्ति उन्हीं श्रीगौराङ्ग का मैं स्मरण करता हूँ ।

पुरीं रामाख्यं यो गुरुजनकथा निन्दनपरं सदोपेक्ष्य भ्रान्तं कलिकलुषकूपेगतमिह।
अमोघं स्वीचक्रे हरिजनकृपालेशबलत: शचीसूनु: शश्वत् स्मरणपदवीं गच्छतु स मे।।६५।।

६५-इसी नीलाचल में जिन्होंने निज गुरुदेव तथा उनके उपदेश की निन्दाकारी, भ्रांत, कलि अपराध-कुआं में पतित रामचन्द्र पुरी की सर्वदा उपेक्षा किये थें परंतु निज प्रभावद्वारा वैष्णवगण के नाममात्र कृपापात्र अमोघदास (सार्वभौम का दामाद को जिन्होंने ग्रहण किए थे, उन्हीं श्रीशचिनन्दन मेरे स्मरण पथ में नित्यकाल उदित (होने के लिए कामना करता हूँ) हों ।

सनातनं कण्डुरसप्रपीडितं स्पर्शेन शुद्धं कृपया चकार य:।
स्वनाशबुद्धिं परिशोधयन्नहो स्मरामि गौरं नवखण्डनागरम्।।६६।।

६६-अहो! जिन्होंने खुजली घावें की बीमारी से पीड़ित श्रीसनातन गोस्वामी को आत्मघात बुद्धि से शोधनपूर्वक कृपावशत: स्पर्श मात्र निरोग किया था, उन्हीं नवद्वीप नागर श्रीगौराङ्ग का मैं स्मरण करता हूँ ।

गोपीनाथं नरपतिबलाद्यो ररक्षात्मतन्त्रो रामानन्दानुजनिजजनं शिक्षयन् धर्मतत्त्वम्।
पापैर्लब्धं धनमिह सदा त्याज्यमेव स्वधर्मात् तं गौराङ्गं स्वजनशिवदं भद्रमूर्तिं स्मरामि।।६७।।

६७-स्वधर्म में स्थित हो कर पापलभ्ध धन सदा तज्य, यही धर्मतत्व, यह कर्तव्य ज्ञान शिक्षा धनपूर्वक जो स्वतंत्र पुरुष निजजन और श्रीरामानन्द के कनिष्ठ भ्राता गोपीनाथ को नृपति जैसे बल द्वारा रक्षा किए थे, निज जनगण के मंगल विधाता मंगलमूर्ति उन्हीं श्रीगौराङ्ग का मैं स्मरण करता हूँ ।

उपायनं राघवतः समादृतं पुनः पुनः प्राप्तमपि स्वदेशतः।
स्वभक्ततोयेन परात्परात्मना तमेव गौरं सततं स्मराम्यहम्।।६८।।

६८-जो परात्पर ईश्वर निज भक्त राघव पण्डित द्वारा निज देश से लाया उपहार पुनः पुनः आदर सहित प्राप्त किए थे, उन्हीं श्रीगौराङ्ग का मैं स्मरण करता हूँ ।

तैलं नाङ्गीकृतं येन संन्यासधर्मरक्षिणा । जगदानन्ददत्तञ्च स्मरामि तं महाप्रभुम्।।६९।।

६९-(लेकीन) जिन्होंने संन्यास आचरण रक्षा हेतु श्रीजगदानन्द द्वारा दिया गया तेल ग्रहण नहीं किए थे, उन्हीं श्रीमहाप्रभू का मैं स्मरण करता हूँ ।

जगन्नाथागारे गरुडसदने स्तंभनिकटे ददर्श श्रीमूर्तिं प्रणयविवशा कापि जरती।
समारुह्य स्कन्धं यदमलहरेस्तुष्टमनसः शचीसूनुः शश्वत् स्मरणपदवीं गच्छतु स मे।।७०।।

७०-श्रीजगन्नाथदेव मंदिर में गरुड़सदन स्तम्भ के निकट दण्डायमान श्रीगौरहरि के स्कन्ध पर चढ़ कर कोई एक प्रेमाभिभूत वृध्दा श्रीजगन्नाथदेव का श्रीमूर्ति दर्शन की थी । वैसा श्रीशचिनन्दन मेरे स्मरण पथ में नित्यकाल उदित हों ।

पुरीदेवे भक्तिं गुरुचरणयोग्यां सुमधुरां दयां गोविन्दाख्ये विशदपरिचर्याश्रितजने।
स्वरुपे यो प्रीतिं मधुररसरुपां ह्यकुरुत शचीसूनुः शश्वत् स्मरणपदवीं गच्छतु स मे।।७१।।

७१-जिन्होंने निज गुरुदेव श्रीपरमानन्द पुरी के प्रति उपयुक्त सुमधुर भक्ति प्रदर्शण, श्रीगोविन्द नामक विशुद्ध सेवाश्रित भक्त को दया और श्रीस्वरुप दामोदर के निकट श्रेष्ठ मधुर रस का प्रकाशित किया था, वही श्रीशचिनन्दन मेरे स्मरण पथ में नित्यकाल उदित हों ।

दधानः कौपीनं वसनमरुणं शोभनमयं सुवर्णाद्रेः शोभां सकलसुशरीरे दधदपि।
जपन् राधाकृष्णं गलदुदकधाराक्षियुगलः शचीसूनुः शश्वत् स्मरणपदवीं गच्छतु स मे।।७२।।

७२-कोपिन और उज्जवल अरुणवर्ण वस्त्र परिहित जो सुचारु देह स्वर्ण पर्वत के शोभाधारी और विगलित अश्रुधारा से प्लावित नयनयुगल सहित राधाकृष्ण नाम कीर्तनकारी वही श्रीशचिनन्दन मेरे स्मरण पथ में नित्यकाल उदित हों ।

मुदागायन्नुच्चैर्मधुरहरिनामावलिमसौ नटन् मन्दं मन्दं नगरपथगामि सहजनैः।
वदन् काक्वा रेरे वदहरिहरित्यक्षरयुगं शचीसूनुः शश्वत् स्मरणपदवीं गच्छतु स मे।।७३।।

